स्वगृहे पूज्यते मूर्खः ।
स्वग्रामे पूज्यते प्रभुः ।
स्वचित्तकल्पितो गर्वः कस्य केन प्रशाम्यति । (प० त०)
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते । (कु० स०)
स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत् । (क० स०)
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता । (शि० व०)
स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा ।
स्वदेशे पूज्यते राजा । (चा० नी०)
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । (भ० गी०)
स्वधियो निश्चयो नास्ति यस्य स भ्रमति स्वयम् । (दृ० श०)
स्वपन्त्यज्ञा हि निश्चिन्ता कुतो निद्रा विवेकिनाम् । (क० स०)
स्वपदाच्च्यवमानस्य कस्याज्ञा को हि मन्यते । (क० स०)
स्वभाव एवैष परोपकारिणाम् । (भर्तृ०)
स्वभावतः सर्वमिदं हि सिद्धम् ।
स्वभावस्वच्छाना पतनमपि भाग्यं हि भवति ।
स्वभावो दुरतिक्रमः । (प० त०)
स्वभावो यादृशो यस्य न जहाति कदाचन । (चा० नी०)
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः । (कि० अ०)
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते । (र० व०)
स्ववीर्यगुप्ता हि मनोः प्रसूतिः । (र० व०)
स्वसुखं नास्ति साध्वीनां तासां भर्तृसुखं सुखम् । (क० स०)
स्वस्थे को वा न पण्डितः । (प० त०)
स्वस्थे चित्ते बुद्धयः संभवन्ति ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते (र० व०)
स्वाधीनकुशलाः सिद्धिमन्तः । (अ० शा०)
स्वाधीना दयिता सुतावधि ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तो ह्युपकारिपक्षम् । (कि० अ०)
स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः । (क० स०)
स्वामिवत्पञ्च वर्षाणि दश वर्षाणि दासवत् । प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ (प्र० भ०)
स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः । (प० त०)
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति । (शि० व०)
स्वेनानलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात् । (शि० व०)
हंसो यथा क्षीरमिवाम्बुमध्यात् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः । (अ० शा०)
हहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ।
हतं ज्ञानं क्रियाहीनम् । (वृ० चा०)
हतमश्रोत्रियं श्राद्धं । (चा० नी०)
हतं सैन्यमनायकम् । (चा० नी०)
हतश्चाज्ञानतो नरः । (वृ० चा०)
हतविधिपरिपाकः केन वा लङ्घनीयः । (मे० दू०)
हरति मनो मधुरा हि यौवनश्रीः । (कि० अ०)
हसन्नपि नृपो हन्ति ।
हस्तस्य भूषणं दानम् ।
हस्तौ दानविवर्जितौ । (वृ० चा०)
हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ।
हास्यादृते किमन्यत्स्यादतिलौल्यवतां फलम् । (क० स०)
हा हा तथापि विषयान्न जहाति चेतः । (भर्तृ०)
हिंसा बलमसाधूनां । (म० भा०)
हितप्रयोजनं मित्रम् ।
हितभुङ्मितभुक् शाकभुक् ।
हितमारण्यमौषधम् ।
हितं मनोहारि च दुर्लभं वचः । (कि० अ०)
हितैषिणः सन्ति न ते मनीषिणः ।
हितोपदेशो मूर्खस्य कोपायैव न शान्तये । (क० स०)
हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते···· ····मित्राणि । (र० व०)
हीयते हि मतिस्तात हीनैः सह समागमात् ॥ (हि०)
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा । (र० वं०)
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः । (प० त०)
ह्यर्थो हि लोके पुरुषस्य बन्धुः । (भर्तृ०)
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः । (नै० च०)

इति सुभाषितरत्नखण्डमञ्जूषा संपूर्णा ॥

## ग्रन्थसमाप्तिः

इति विरचितबन्धा पद्धतिर्या मयेयं सकलगुणिगणानां प्रीतये सास्तु नित्यम् ।
विपुलविमलदीव्यत्सत्कलानां निधानं तरुणतरणिरुद्धा विद्विषत्कौशिकानाम् ॥

अस्याभ्यासाद्ग्रन्थवर्यस्य शिष्यः सर्वज्ञः स्याद्विस्फुरच्चारुबुद्धिः ।
अर्थं कामं वेत्ति धर्मं च मोक्षं निःसंदेहं शीलितुं पण्डितोऽपि ॥

शास्त्राब्धिं सकलं विलोड्य नितरां ग्रन्थः कृतोऽयं मया
लोकानन्दकरः समस्तसुकलासंतानजैवातृकः ।
अस्यास्वाद्य सुभाषितामृतरसानानन्दपूर्णान्तराः
सन्तः संप्रति नाकवासनिरतान्देवान्हसन्तु ध्रुवम् ॥

---

## विज्ञप्तिः

दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम् ।
आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः ।

---

## आशीर्वचनम्

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥

# सुभाषितरत्नभाण्डागारस्थपद्यानां सस्थाननिर्देशमनुक्रमकोशः

## अ



१ अत्रोपयुक्तसाकेतिकचिह्नाना विवरण 'साकेतिकचिह्नपरिचय'तोऽवसेयम् ।

आ

## इ

## ऊ

ख

## छ



## ज

## द

## ध

## न

## भ

## म

समाप्तोऽयं सुभाषितरत्नभाण्डागारस्थपद्यानुक्रमकोशः

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ. | श्लो. |
|---|---|---|---|
| यन्वत्र | यन्वत्र | ३७७ | १५ |
| मूल | मूल | ,, | २५ |
| यत्नन | यत्नेन | ,, | २६ |
| पूजयि वा | पूजयित्वा | ,, | ३० |
| प्रतिष्ठे ा | प्रतिष्ठेता | ,, | ३१ |
| क्लैव्य | क्लैब्यं | ३७८ | ६७ |
| दारुभ्य | दारुभ्यो | ३८० | १११ |
| जयेक्रुद्धो | जयेत्क्रुद्धो | ,, | १२० |
| श्मश्रद्धोध | श्मश्रूद्धोध | ,, | १३० |
| मर्यं गच्छत्यमुत्र | मर्यं सह गच्छत्य | ३८२ | १९४ |
| अभिमान | अभिमान | ,, | २२३ |
| हन्या पूर्वा | हन्यात्पूर्वा | ,, | २३० |
| मूर्ख विचारणैषा | मूर्खविचारणैषा | ३८३ | २७० |
| वपुसृग | वपुर्मृग | ३८४ | २७६ |
| सजयाते | सजायते | ,, | २८१ |
| जलाकाना | जलौकाना | ,, | २८४ |
| ऐण | ऐण | ,, | २९० |
| स्वभवो | स्वभावो | ,, | २९६ |
| जीन्मिवेतेन | जीवेन्मितेन | ,, | २९८ |
| मेत्री | मैत्री | ,, | ३०० |
| निकामकमा | निकामकाम | ,, | ३०६ |
| क्रुद्धत्य | क्रुद्धत्य | ३८६ | ३४५ |
| सत्त्व | सत्त्वं | ३८७ | ४०५ |
| भक्त | भक्ते | ३८८ | ४५० |
| समार्जनी रज | समार्जनीरज | ३८९ | ४८५ |
| भा नाश्नति | भार्याजितस्य नाश्नन्ति | ,, | ४८६ |
| यत्त | यत्तु | ३९० | ५१४ |
| मुनिहित | सुनिहित | ३९१ | ५३७ |
| त्प्रमाणक स्तस्य | त्प्रमाण कस्तस्य | ,, | ५७० |
| भोजने | भोजने जने | ,, | ५७५ |
| कर्तव्योऽध्येन | कर्तव्योऽध्ययने | ,, | ,, |
| वह्मौका | ब्रह्मौका | ३९१ | ५८४ |
| श्लाध्य | श्लाघ्य | ,, | ६१२ |
| भायया भता | भार्यया भर्ता | ,, | ६१९ |
| कायास्तते | कायास्तटे | ३९३ | ६४२ |
| जलाद्युतिमतो | जलाद्द्युतिमतो | ,, | ६४२ |
| दोग्धव्यं | द्रोग्धव्यं | ३९४ | ६९२ |
| धार्मात्मन | धर्मात्मानः | ,, | ६९४ |